TRIVANDRUM SANSKRIT SERIES.

No. CIII.

Śrī Setu Lakṣmī Prasādamālā.

No. XV.

# THE HAMSASANDEŚA

## WITH COMMENTARY

EDITED BY

K. SĀMBAŚIVA ŚĀSTRI,

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1930.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १०३.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः १५.

# हंससन्देशः

सव्याख्यः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितः ।

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितः ।

॥ श्रीः ॥

श्रीपद्मनाभसेवि-<br>
न्यखिलश्रीवर्धनी महाराज्ञी ।<br>
श्रीसेतुलक्ष्म्यभिख्या<br>
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे<br>
प्रसाधिता तत्प्रसादगुणगुम्फा ।<br>
श्रीसहितसेतुलक्ष्मी-<br>
प्रसादमाला सुवर्णमणिचित्रा ॥

# INTRODUCTION.

This is a rare Śandeśakāvya with an equally rare commentary written in metrical form. The subject matter of the work in brief is this :— A certain Śaiva devotee who had been in enjoyment of Advaitānanda resulting from his happy union with Bhakti as his inseparable consort was, from the effect of his previous Karma, forced to be separated from his beloved spouse. The pang of separation making his life unbearable, he yearns to be united once again with Bhakti. He then makes a Hamsa (swan) of his own mind, and sends through it a message of love to his beloved who is living far away in the abode of Śiva. At the very outset of the work, the author attributes the illusion caused by the attachment towards worldly affairs as the reason for the separation,

"कश्चिन्मायामृगवशगतः कर्मणा मुह्यमानो
भक्त्या शम्भोश्चरणभवया विप्रयुक्तो विषण्णः।" (p. 1).

and consistently finishes the work by mentioning non-attachment towards Karma as the cause of reunion with Bhakti thus :—

"सञ्छिद्याहं मम तदिदमित्यादिसंसारपाशान्
स्वैरं लोके विहर सुचिरं कर्मलेपैरलिप्तः।" (p 39).

This consistency holds good not only in the case of प्रस्तुत (that which is under consideration) but also of what is अप्रस्तुत, in as much as the introductory verse refers to the resemblance of Rāma's separation from Sīta,

"रामो यद्वज्जनकसुतया दण्डकारण्यभूमौ
क्षेत्रे प्राप्ते क्वचन पुरुषः कल्पयामास वासम्।" (p. 1).

and the concluding verse alludes to the likeness of Rāma's recovery of Sīta,

"कामं हत्वा बहुमुखमथ प्रेयसीं तामवाप्स्ये
यद्वत् पूर्वं रघुकुलपतिर्मैथिलीं मान्यशीलाम्।" (p. 38).

It is well-known that the Sandeśakāvyas trace their origin to the incident of Rāma's sending a message to Sīta through Hanuman as depicted in the Rāmāyaṇa of Vālmīki and take for their model the Meghasandeśa of Kālidāsa. The author of the present work appears to be an adherent of this view when he makes explicit reference to Rāma's message in the verse,

"क्षेत्रे तस्मिन् सह विहरतामिन्द्रियाणां मृगाणां
कृत्वा तृप्तिं विषयकबलैर्यापयित्वा दिनानि ।
संसाराब्धेः प्रतरणविधावाञ्जनेयं यथान्यं
हंसं कञ्चित् सहचरमसौ मानसस्थं ददर्श ॥" (p. 2).

and also when he modifies the verse of Kālidāsa,

"त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥"
(Uttaramegha, slo. 42).

into,

"संविद्धातुद्रवमतितरां स्वच्छमासाद्य सद्यः
प्रज्ञासंज्ञामपि च फलकां तूलिकां ध्यानरूपाम् ।
शान्तां मूर्तिं तव विलिखितुं भावयाम्येष यावत्
तावद् वैरी नयनयुगळं बाष्पपूरो निरुन्धे ॥" (p. 34).

The author by way of bringing out a forced reference to Kālidāsa in the verse,

"कालीं कालाम्बुदनिभरुचिं तां सकृत् तत्र नत्वा
प्राप्तासि त्वं प्रथितमहसः कालिदासस्य कीर्तिम् ।
सूक्तिज्योत्स्नाद्युतिविततिभिः स्वर्धुनीस्पर्धिनीभिः
श्लाघ्यं काव्यं भुवि रचयतां मातृका यत्प्रबन्धाः ॥" (p. 18).

seems to be an aspirant of the fame of that master poet, and this is borne out by the following statement of the commentator,

"किञ्चिन्निमित्तमाश्रित्य कालिदासं महाकविम् ।
उपश्लोकयितुं प्राह कविः श्लोकं सुबोधकम् ॥" (p. 18).

Though the author deals with a philosophical theme he always keeps in his mind's eye the dictum that camatkāra is the real life of a poem and in support of this statement may be cited the verse,

"आश्लिष्य त्वामथ विवृणुयां स्नेहमानन्दसान्द्रं
कम्पैः स्वेदैरपि च पुलकैर्नेत्रयोर्मीलनेन ।
यत्संश्लेषे सति तु गुरुणा शङ्करेणाप्यभिन्नं
प्रेक्षिष्यन्ते ननु सुमनसो मां च साक्षान्महेशम् ॥" (p. 36).

He also finds occasion to inculcate some pieces of sound advice, namely, a Pativrata whose husband is far away from

home should live with her parents and that a husband in exile should show his devotion and reverence to his wife's parents, in the verse,

"दूरस्थः सन् प्रणमति मम प्राणनाथोऽनुरक्त.
पादाम्भोजं स खलु युवयोः सख्युरस्यैव मूर्ध्ना ।
इत्थं पित्रोस्तव सदययोः सम्यगावेदयार्यै!
कुर्याः किञ्चित् त्वमपि नमनं तन्वि! ताभ्यां शिवाभ्याम् ॥"
(p. 36).

The outstanding feature of the work is the twofold course namely, the Adhyātmic and the Yogic which are in accordance with the significance of the name "Hamsasandeśa". Among these, the Adhyātmic course is the attainment of Śivasāyujya by a man who is dependent on the Prārabdha Karma and is consequently passing through worldly existence, after he is freed from all worldly bonds and his identity destroyed by faith, understanding, hearing, steadiness, tranquillity, endurance and other kinds of austerity. The Yogic course is the mind's journey through various stages beginning with "Suṣumna" upto "Dvādaśāntendumaṇḍala" and its final repose along with Bhakti in the state of Amṛtayoga. The Yogic course is described thus,

"मूले लिङ्गं महितभुजगीमौलिरत्नायमानं
संसर्पन्त्या शिशिरसुधया द्वादशान्तेन्दुशङ्खात् ।
भक्त्या युक्तस्तव सहजया भूयसैवाभिषिञ्च-
स्तत्तोयेन प्रियसख! तनुं प्लावयित्वा सुखी स्याः ॥" (p. 38).

and the Adhyātmic course is thus pictured,

"न त्यक्ष्यामि क्षणमपि चिरात् संश्रितां तां तु साध्वीं
तस्यां सक्तः सुचिरमनघं स्वाधिराज्यं प्रपत्स्ये ।
श्रद्धां मेधां श्रुतिमपि धृतिं शान्तिदान्ती च मुक्तिं
कृष्णो गोपीजनमिव भजन् निर्वृतस्त्वं च भूयाः ॥" (p. 38).

The softening of a dry philosophical subject with Rasa resulting from the poetic description of the happy union of the best type of hero and heroine is the third course which runs throughout the work and which is relishable by all Sahṛdayas. In support of this statement, a few specimen verses are cited below :—

"दृष्टे तस्मिंश्चिरविरहितां प्रेयसीं रुद्रमार्त्तिं
स्मारं स्मारं सजलनयनस्तत्र तूष्णीं बभूव ।
उच्चैः स्थित्वा हतविधिवशात् प्राप्तताहग्विधानां
मूकीभावः खलु समुचितो बान्धवानां पुरस्तात् ॥" (p. 4).

"भूरिक्लेशे विषयविपिने भूयसा मुह्यमानं
भक्त्यावासं पशुपतिपदं गन्तुमेनं ययाचे ।
नैवाविन्दत् तदिह वचसां चेतसामप्यभूमिं
युक्तायुक्तेष्वपि हि विदुषामर्थिनां नो विवेकः ॥" (p. 5).

"कार्श्यं यायात् खलु विधिवशात् प्रायशः साम्प्रतं सा
कालुष्यं वा मयि पुनरनाचारमाशङ्कमाना ।
शोचेत् किं वा प्रियसहचरी दुर्लभं मां विदित्वा
किं किं बालाः प्रियविरहिता नैव सञ्चिन्तयन्ति ॥" (p. 32).

"एकान्ते त्वां प्रणयभरितो निर्विशन्नेकदा तु
प्राप्तुं शम्भुं सपदि निभृतो यः पुरा संसृतोऽस्मि ।
अस्मादार्ये ! कुशलिनमभिज्ञानतो मां विदित्वा
त्वां चावश्यं भव कुशलिनी तत्पदं सेवमाना ॥" (p. 35).

The route that the Hamsa is asked to take, the various places on the way and their presiding deities are as follows :— The first is the northern quarter and then the holy regions at the confluence of the rivers Ganges and Jumna, where there is a Mūlasthāna guarded by the deities Īśa, Gaṇapati, Subrahmaṇya and Durgā; near this place is the penance grove of Pārvatī and north of this grove is found the Kīcakavana where Siddhas are said to attain supreme felicity; then a huge ant-hill and then Mahāmeru and further on a Maṇṭapa all made of gems, where the goddess Aparṇā takes her seat in the form of a Kirātī (mountaineer); above this Maṇṭapa is Pūrnagirigrāma watched over by the goddess Maṅgalāmbā, then the Jalandhara country directed by Īśvara who remains in a hanging posture and above this is the Śivaloka which is also known as Dvādaśānta.

Nothing has been known about the author of this work or of its metrical commentary. His Highness Viśakham Tirunal Maharaja who was interested in Sanskrit studies and himself a great scholar wrote about this work as follows :—

"The other Hamsasandeśa whose author's name could not be found out, is quite of a different nature The subject is a philosophical one. It is probable that some rival poet of the Vaishṇava Vedāntācārya has written this, as he (the Vedāntācārya) has composed a Nāṭaka named "Saṅkalpasūryodaya" to match the Prabodhacandrodaya". (J. R. A. S. Vol. XVI. p. 450)

"All these Sandeśas, except the Hamsa ............ are productions of poets born in Malabar". (Ibid. p. 449).

His Highness is of opinion that this work and three other Sandeśas are the productions of Kerala poets and that the author wrote it as Vedānta Deśika wrote his Saṇkalapa-sūryodaya after the model of Prabodhacandrodaya. Vedānta Deśika has written a Hamsasandeśa, but the present work, though it bears an identical name, differs vastly from Deśika's work.

The statement,

"यत्संश्लेषे सति तु गुरुणा शङ्करेणाप्यभिन्नम्' (p. 36).

however gives room for thinking that the author might be a disciple of the great Sankarācarya.

There is also a third Hamsasandeśa, a manuscript copy of which has been acquired for this department. From the introductory and concluding verses of this work,

"'काचित् कान्ताविरहशिखिना कामिनी कामतप्ता
निध्यायन्ती कमपि दयितं निर्दयं दूरसंस्थम् ।
भूयो भूयो रणरणकतः पुष्पवाटीं भ्रमन्ती
लीलावापीकमलपथिकं राजहंसं ददर्श ॥"

"अर्घ्यं विष्णोः पदमनुपतन् पक्षपातेन हंसः
पूर्णज्योतिःपदयुगजुषः पूर्णसारस्वतस्य ।
क्रीडत्येव स्फुटमकलुषे मानसे सज्जनानां
मेघेनोच्चैर्निजरसभरं वर्षतामर्षितोऽपि ॥"

it may be inferred that its author was no other than the Kerala poet Pūrṇasarasvati, a great lover and commentator of Meghaduta, and in the statement मेघेनोच्चैर्निजरसभरम् of the last verse, he appears to make a covert reference to that model lyric of Kalidāsa. I hope to publish this work ere long and also some other Sandeśakāvyas under the title "Sandeśamālikā". As the present work treats of a philosophical subject in poetic form and is accompanied by a metrical commentary, it is placed before the public as the first instalment.

The edition of the work is based on two complete manuscripts. The first marked क belongs to the Palace library, and the second marked ख was obtained from the library of Brahmasri Bhanu Bhanu Pandarathil of Kottarakkara. Both these manuscripts are about four centuries old.

*Trivandrum*
*15-12-105.*

K. SĀMBAŚIVA ŚĀSTRĪ,

# उपोद्घातः ।

अपूर्वमिदं सव्याख्यं किमपि सन्देशकाव्यं, यत्र व्याख्या श्लोकात्मिका। कोऽपि शिवभक्तः सुचिरसहचरीं भक्तिमविरहयन्नद्वैतानन्दमनुभवन् कदाचन कर्मवशात् तद्विरहितः संसरन् परिक्लिश्यमानः पूर्ववासनाबलेन पुनरपि तया सह सङ्गमिच्छन्नात्मनश्चित्तमेव* हंसभूयं प्रापय्य तन्मुखेन शिवलोकवासिन्यास्तस्या निजसन्देशं प्रेषयतीत्ययमत्र प्रतिपाद्यसङ्ग्रहः । चित्तस्य कर्मलेपान्मोहं भक्तिनायिकया विरहे —

"कश्चिन्मायामृगवशगतः कर्मणा मुह्यमानो
भक्त्या शम्भोश्चरणभवया विप्रयुक्तो विषण्णः ।"

(पृ० १. श्लो० १)

इति हेतुमादावुपन्यस्यान्ते तत्सङ्गमे —

"सञ्छिद्याहं मम तदिदमित्यादिसंसारपाशान्
स्वैरं लोके विहर सुचिरं कर्मलेपैरलिप्तः ।"

(पृ० ३९. श्लो० ५१)

इति तदलेपं साधकं निरूपयन् कविरुपक्रमानुगुणमेव सन्देशं समञ्जसमुपसंहरति। न केवलमिदमानुगुण्यं प्रस्तुतमात्रे दत्तदृष्टेः कवेः, अपित्वप्रस्तुतेऽपि । तथाहि —

"रामो यद्वज्जनकसुतया दण्डकारण्यभूमौ
क्षेत्रे प्राप्ते क्वचन पुरुषः कल्पयामास वासम् ॥"

(पृ० १. श्लो० १)

इति श्रीरामस्य सीताविरहसादृश्य उपक्रम्य,

---

* चित्तस्य हंसभावश्च —

"आर्ये! भर्तुस्तव सहचरश्चित्तसंज्ञोऽस्मि हंस-
स्तत्सन्देशादुपगत इहेत्येदमाचक्ष्व तस्यै ।"

(पृ० ३३ श्लो० २६)

इति पद्ये कविनैवाविष्कृतः ।

"कामं हत्वा बहुमुखमथ प्रेयसीं तामवाप्स्ये
यद्वत् पूर्वं रघुकुलपतिर्मैथिलीं मान्यशीलाम् ।"

(पृ० ३८. श्लो० ४९)

इति सीतापुनःप्राप्तिसादृश्य उपसंहारः कृतः ।

सर्वस्यापि सन्देशकाव्यस्य आदिकविश्रीवाल्मीकिरामायणान्तर्गतो हनुमत्सन्देश आदर्शः, महाकविश्रीकालिदासीयमेघसन्देशो निदर्श इति च सहृदयसम्मतं सिद्धान्तमयं हंससन्देशकर्ता—

"क्षेत्रे तस्मिन् सह विहरतामिन्द्रियाणां मृगाणां
कृत्वा तृप्तिं विषयकबलैर्यापयित्वा दिनानि ।
संसाराब्धेः प्रतरणविधावाज्ञनेयं यथान्यं
हंसं कञ्चित् सहचरमसौ मानसस्थं ददर्श ॥"

-- (पृ० २. श्लो० २)

इति वाच्यवृत्त्या,

"त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥"

(मेघस० उत्तर० श्लो० ४२)

इति मेघसन्देशगतपद्यच्छायाविवर्तात्मना—

"संविद्धातुद्रवमतितरां स्वच्छमासाद्य सद्यः
प्रज्ञासंज्ञामपि च फलकां तूलिकां ध्यानरूपाम् ।
शान्तां मूर्तिं तत्र विलिखितुं भावयाम्येष यावत्
तावद् वैरी नयनयुगलं बाष्पपूरो निरुन्धे ॥"

(पृ० ३४. श्लो० ३५)

इति पद्येन व्यङ्ग्यभङ्ग्या च रेखामात्रमप्यव्यतियन्ननुतिष्ठतीति सुविशदं सुधियाम् । किञ्च

"कालीं कालाम्बुदनिभरुचिं तां सकृत् तत्र नत्वा
प्राप्तासि त्वं प्रथितमहसः कालिदासस्य कीर्तिम् ।

सूक्तिज्योत्स्नास्रुतिविततिभिः स्वर्धुनीस्पर्धिनीभिः
श्राव्यं काव्यं भुवि रचयतां मातृका यत्प्रबन्धाः ॥"
(पृ० १८. श्लो० ३८)

इति श्लोकेन कथञ्चिदपि हठान्निमित्तमुपाक्षिप्य श्रीकालिदासमुपश्लोकयन् कविरयं स्वयं हंसापदेशेन कालिदासकीर्तिकामी स्वर्धुनीस्पर्धिनीभ्यस्तदीयसूक्तिज्योत्स्नास्रुतिविततिभ्यः स्पर्धत इव । अत्राह व्याख्याता —

"किञ्चिन्निमित्तमाश्रित्य कालिदासं महाकविम् ।
उपश्लोकयितुं प्राह कविः श्लोकं सुबोधकम् ॥"

इति ।

चिरतरानुभूतनायिकाविरहकातरस्य कामुकस्यानाचारबलाद् दूरनीतस्य चित्तहंसं प्रसाद्य दूतेन तेन नायिकायाः स्वसविधप्रापणे,

"आश्लिष्य त्वामथ विवृणुयां स्नेहमानन्दसान्द्रं
कम्पैः स्वेदैरपि च पुलकैर्नेत्रयोर्मीलनेन ।
यत्संश्लेषे सति तु गुरुणा शङ्करेणाप्यभिन्नं
प्रेक्षिष्यन्ते ननु सुमनसो मां च साक्षान्महेशम् ॥"
(पृ० ३६. श्लो० ३९)

इति सङ्कल्पकल्पितं सान्द्रानन्दानुभवमनुगतैः कम्पस्वेदपुलकनेत्रमीलनादिभिर्व्यभिचारिभिर्व्यङ्ग्यमर्यादया विवरीतुमुद्युञ्जानः कविरयं मन्ये सन्देशकाव्यस्यास्य चमत्कारजीवितत्वं वाञ्छति । अन्यच्च' वेदान्तप्रक्रियानिरूपणमभिसन्दधताप्यनेन सन्देशेन —

"दूरस्थः सन् प्रणमति मम प्राणनाथोऽनुरक्तः
पादाम्भोजं स खलु युवयोः सख्युरस्यैव मूर्ध्ना ।
इत्थं पित्रोस्तव सदययोः सम्यगावेदयार्ये !
कुर्याः किञ्चित् त्वमपि नमनं तन्वि ! ताभ्यां शिवाभ्याम् ॥"
(पृ० ३६. श्लो० ४०)

इत्युक्तदिशा भर्तृविरहितायाः पतिव्रतायाः पितृगृहे निवासस्तादृशे श्वशुरजने भर्तुर्विनयबहुमानने च प्रकृताविरुद्धान्येव यत्तत् साम्प्रतमेवोपदिश्यन्ते ।

सन्देशेऽस्मिन्निदमेकमवश्यं श्रद्धेयं, यत् परमार्थभूतया अध्यात्मसरण्या, तदुपायभूतया योगपद्धत्या च हंससन्देश इति नामधेयानुगुणा द्वयी गतिरादृता। तत्र प्रथमा—प्रारब्धकर्मणा परवतः संसारिजनस्य स्वचित्ते श्रद्धामेधाश्रुतिधृति-शान्तिदान्त्यादिभिः सर्वबन्धविनिर्मुक्ते विलीने स्वरूपनाश एव सति परमात्मरति-रूपया भक्त्या कदाप्यविरहितया शिवसायुज्यरूपस्वाधिराज्यप्राप्तिः। द्वितीया—युञ्जानस्य चित्तहंसस्योपक्रम्य सौषुम्नमध्वानं द्वादशान्तेन्दुमण्डलं यावदनु-क्रमशस्तास्ताः कक्ष्या अतिलङ्घ्य शक्त्या सह गमनेऽन्ततोऽमृतयोगेनाव-स्थानम्। अनयोश्च द्वयोरपि गत्योः पार्यन्तिकाभिसन्धिसमुट्टङ्कनमेवं दृश्यते। यथा योगपद्धतेः—

"मूले लिङ्गं महितभुजगीमौलिरत्नायमानं
संसर्पन्त्या शिशिरसुधया द्वादशान्तेन्दुशङ्खात्।
भक्त्या युक्तस्तव सहजया भूयसैवाभिषिञ्चं-
स्तत्तोयेन प्रियसख! तनुं प्लावयित्वा सुखी स्याः॥"

(पृ० ३८. श्लो० ४७)

अध्यात्मसरणेः—

"न त्यक्ष्यामि क्षणमपि चिरात् संश्रितां तां तु साध्वीं
तस्यां सक्तः सुचिरमनघं स्वाधिराज्यं प्रपत्स्ये।
श्रद्धां मेधां श्रुतिमपि धृतिं शान्तिदान्ती च मुक्तिं
कृष्णो गोपीजनमिव भजन् निर्वृतस्त्वं च भूयाः॥"

(पृ० ३८. श्लो० ५०)

इति। अथ सर्वाङ्गीणा च साहित्यगोष्ठीसरसा तृतीयापि गतिरुत्तमनायिकया नायकस्य सङ्गमसमाचारपर्यवसायिनी शुष्ककर्कशशास्त्रीयसिद्धान्तमेव काव्य-रसेनानुलिम्पती समास्वाद्या दृश्यते। अत्र चेमानि पद्यानि स्थालीपुलाकन्या-येनोदाहरणमुद्ध्रियन्ते—

"दृष्टे तस्मिंश्चिरविरहितां प्रेयसीं रुद्रभक्तिं
स्मारं स्मारं सजलनयनस्तत्र तूष्णीं बभूव।
उच्चैः खित्वा हतविधिवशात् प्रासतादृग्विधानां
मूकीभावः खलु समुचितो बान्धवानां पुरस्तात्॥"

(पृ० ४. श्लो० ३)

"भूरिक्लेशे विषयविपिने भूयसा मुह्यमानं
भक्त्यावासं पशुपतिपदं गन्तुमेनं ययाचे ।
नैवाविन्दत् तदिह वचसां चेतसामप्यभूमिं
युक्तायुक्तेष्वपि हि विदुषामार्थिनां नो विवेकः ॥"

(पृ० ५. श्लो० ५)

"कार्श्यं यायात् खलु विधिवशात् प्रायशः साम्प्रतं सा
कालुष्यं वा मयि पुनरनाचारमाशङ्कमाना ।
शोचेत् किं वा प्रियसहचरी दुर्लभं मां विदित्वा
किं किं बालाः प्रियविरहिता नैव सञ्चिन्तयन्ति ॥"

(पृ० ३२. श्लो० २६)

"एकान्ते त्वां प्रणयभरितो निर्विशन्नेकदा तु
प्राप्तुं शम्भुं सपदि निभृतो यः पुरा संस्मृतोऽस्मि ।
अस्मादार्ये! कुशलिनमभिज्ञानतो मां विदित्वा
त्वं चावश्यं भव कुशलिनी तत्पदं सेवमाना ॥"

(पृ० ३५. श्लो० ३७)

भूमेः शिवलोकपर्यन्तं गमने हंसायोपदिश्यमाना मार्गास्तदन्तर्गता देशास्तत्त-दधिष्ठानदेवताश्चाधः प्रदर्श्यन्ते । यथा —

आदितः सौम्या दिक् । ततो गङ्गायमुनासङ्गमाख्यपुण्यतीर्थप्रदेशः । तत्र नवशशिभृतः कामरूपं मूलस्थानं किमपि । तत्र च ईशः, गणपतिः, सुब्रह्मण्यः, दुर्गा इति चतस्रो देवताः । (पृ० ११. श्लो० १८–२०)

ततस्समीपे पार्वतीतपोवनम् । (पृ० १२. श्लो० २३)

तत उत्तरस्यां कीचकचक्रं सिद्धजनसिद्धिनिवासस्थानम् । (पृ० १३. श्लो० २६)

ततः कोऽपि महान् वल्मीकप्रदेशः । (पृ० १६. श्लो० ३२)

ततो महामेरुः (पृ० १६. श्लो० ३३,३४)

ततो मणिमयः कोऽपि मण्डपः । तत्र अपर्णादेवी किरातीरूपिणी काळी । (पृ० १७. श्लो० ३७)

तदुपरि सिद्धवन्द्यः कश्चन पूर्णगिर्यालयः । तत्र देवी मङ्गलाम्बा । (पृ० १८. श्लो० ४०)

ततः परं जालन्धरदेशः । तत्र लम्बिकानिषण्ण ईश्वरः । (पृ० २२. श्लो० ४७)

ततः श्रीकैलासाख्यं स्थानम् । (पृ० २३. श्लो० ४८)

तत्रैवोपरिद्वादशान्तापरनामधेयः शिवलोकः (पृ० २४. श्लो० ५०)

सर्वथा सहृदयहृदयग्राहिण्या सरण्या दुरधिगममपि समस्तोपनिषत्सारभूतमर्थमेनं सन्देशमपदिश्यानपायिशिवभक्तिनिरूपणद्वारा लोकानुपदिशन्नयं कविर्यथार्थतः कोऽपि हंस एव प्रतिभाति ॥

अस्य च सन्देशकर्तुर्नामधेयदेशजीवितसमयादिकं प्रति न किमप्यवगम्यते । पण्डितसार्वभौमाः पुरातनकार्यविमर्शश्रद्धालवश्चास्माकं **श्रीविशाखमहाराजाः** १८८४ तमक्रिस्तुवर्षप्रकाशितएष्याट्टिक् सोसैट्टि जर्नल् संज्ञितायां सञ्चिकायां ४५० तमे पृष्ठे The other 'Hamsa sandesa' whose author's name could not be found out, is quite of a different nature. The subject is a philosophical one. It is probable that some rival poet of the Vaishnava Vedandacharya has written this, as he(the Vedantacharya) has composed a nataka named 'Sankalpasūryodaya' to match the 'Prabodhachandrodaya'

इति कथयन्ति । अन्यत्र च ४४९ तमे पुटे

'All these, सन्देशाः exept हंस are productions of poets born in Malabar.'

इति प्रस्तुतं हंससन्देशमप्यन्तर्भाव्य चतुर्णां सन्देशानां केरळाभिजनकविनिर्मितत्वं वदन्ति । इयता अस्य कर्ता कोऽपि केरळीयः, स च प्रबोधचन्द्रोदयदर्शनादिव **श्रीवेदान्तदेशिकाचार्यैः** सङ्कल्पसूर्योदयं, सूर्योदयदर्शनादिमं हंसं समुत्थापयति स्म । नामसाम्येऽपि **श्रीवेदान्तदेशिकीयहंससन्देश**स्यास्य च सर्वथा महदन्तरं, कर्तृनामधेयं च ज्ञातुं न शक्यत इति प्रतिपाद्यते। किन्तु पूर्वोद्धृतषट्त्रिंशपुटगतैकोनचत्वारिंशश्लोके 'यत्संश्लेषे सति तु गुरुणा शङ्करेणाप्यभिन्नस्' इति कथनाद् अपिनाम भवेदयं जगद्गुरु**श्रीशङ्कराचार्य**भगवत्पादाना कश्चिदन्तेवासीति सम्भावना प्रसरति । यथा कर्तुस्तथा व्याख्यातुरपि नामधेयादिकं न ज्ञायते ।

अथ तृतीयोऽपि कश्चन हंससन्देशः सम्प्रति दृष्टोऽनुभूतश्च मन्येऽवश्यमिह प्रस्तावनामर्हति । यत्रेमावाद्यन्तौ श्लोकौ भवतः —

"काचित् कान्ता विरहशिखिना कामिनी कामतप्ता
निध्यायन्ती कमपि दयितं निर्दयं दूरसंस्थम् ।
भूयोभूयो रणरणकतः पुष्पवाटीं भ्रमन्ती
लीलावापीकमलपथिकं राजहंसं ददर्श ॥

"अग्र्यं विष्णोः पदमनुपतन् पक्षपातेन हंसः
पूर्णज्योतिःपदयुगजुषः पूर्णसारस्वतस्य ।
क्रीडत्येव स्फुटमकलुषे मानसे सज्जनानां
मेघेनोच्चैर्निजरसभरं वर्षतामर्षितोऽपि ॥"

इति । अत्रास्मादन्तिमश्लोकात् सन्देशोऽयं सुप्रसिद्धस्य केरलीयमहाकवेः श्री-**पूर्णसरस्वती**नामधेयस्येति शक्यमभ्यूहितुम् । तत्रत्येन 'मेघेनोच्चैरि'त्यनेन मेघसन्देशकाव्ये प्रीतिमांस्तद्व्याख्याता स्वयं पूर्णसरस्वतीकविर्निर्मत्सरे रसिक-जनमानसे स्वकीयस्य हंससन्देशस्य क्रीडनमविरुद्धं व्यङ्ग्यभङ्ग्या समर्थयत इव । निसर्गतो विरहवेदनासहनशीलाभ्यः कामिनीभ्यस्तदसहनाः कमनाः सन्देशमारचयन्तीति सम्प्रदायं परिहायेह पूर्णसरस्वतीये —

'काचित् कान्ता विरहशिखिना कामिनी कामतप्ता'

इति कामिन्या कमनाय सन्देशः कृत इत्ययं विशेषो दृश्यते । न चिरादिमं प्रकाश्य कृतार्थीभवितुं सहृदयानुग्रहजीवातुः प्रयतिताहे । सन्देशमालिकानाम्न कतीनाञ्चन सन्देशकाव्यानां प्रसिद्धीकरणे कृतमतिरपि प्रकृतस्याध्यात्म-विषयतया पद्यात्मकव्याख्यासनाथतया च सर्वथा अद्वितीयस्यैव प्रकाशनं रसिकजनरुचितमादितः श्रेयस इति तथा कृतवानस्मि ।

अस्य हंससन्देशस्य प्रसाधनप्रकाशनयोरवलम्बभूते मातृके द्वे समग्रे । तयोः प्रथमा — क.संज्ञा महाराजग्रन्थशालीया । द्वितीया—कोट्टारक्कर ब्रह्मश्री भानुपण्डारत्तिल्स्वामिका । द्वे अपि मार्की चतुश्शतपरिवत्सरीपरिवृद्धे दृ-श्येते ॥

अनन्तशयनम्,
१५-१२-१०५.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

# हंससन्देशः

## सव्याख्यः ।

---

**कश्चिन्मायामृगवशगतः कर्मणा मुह्यमानो**
**भक्त्या शम्भोश्चरणभवया विप्रयुक्तो विषण्णः ।**
**रामो यद्वज्जनकसुतया दण्डकारण्यभूमौ**
**क्षेत्रे प्राप्ते क्वचन पुरुषः कल्पयामास वासम् ॥ १ ॥**

गणेश्वरं नमस्कृत्य गुरूंश्च करुणानिधीन् ।
गम्भीरे हंससन्देशे गूढार्थं दर्शयाम्यहम् ॥
अविघ्नेन समाप्त्यर्थं शिष्टाचारानुसारतः ।
करोति मङ्गलाचारं तत्त्वानुस्मृतिलक्षणम् ॥

**कश्चिन्मायेति ।**

को ब्रह्मा[1] परमात्मा वा किंवा ब्रह्म श्रुतौ श्रुतम् ।
चिज्जीवात्मा तयोरैक्यं कश्चिदित्यत्र कीर्त्यते[2] ॥
मृगवच्चेतनाहीनां[3] मृगैर्मायात्र रूप्यते ।
मायामृगात्मा मारीचो यद्वद् राममवञ्चयत् ॥
षड्भिर्भावविकारैः स्वैर्निर्विकारं निरञ्जनम् ।
अयस्कान्तमयांसीव माया भ्रामयतीश्वरम् ॥
रामो रक्षःप्रयुक्तेन यथा भ्रमणकर्मणा ।
मायाकर्मभिरात्मापि[4] चक्रवत् परिवर्तते ॥
भक्तिर्ज्ञानं च वैराग्यमैश्वर्यं मोक्षसाधनम् ।
शिवभक्तिविहीनानां संसारप्राप्तिरात्मनाम् ॥

---

१. 'ह्मा जीवात्मा प', २. 'भिधीयते', ३. 'नं' क. पाठः. ४. 'च' ख. पाठः.

G. P. T. 682. 500. 20-1-1105. B

य: प्रयच्छति भक्तेभ्यः शं सुखं मोक्षलक्षणम् ।
शम्भुरित्युच्यते सद्भिः सोऽन्तर्यामी सदाशिवः ॥

वेदेष्वधी(त ? तं) चरणं पवित्रमिति यत् प्रभोः ।
भक्तिस्तस्मिन् समुद्भूता द्रोणी संसारतारणी ॥

रामः सीतावियुक्तत्वादभूद् भोगेषु निःस्पृहः ।
स्वर्गादिभोगेष्वात्मापि विषण्णोऽभूद् विनाशिषु ॥

नवद्वारं पुरं देहं क्षेत्रमित्युच्यते बुधैः ।
पुरि क्षेत्रे शेत इति क्षेत्रज्ञः पुरुषः स्मृतः ॥

देहस्य दण्डकारण्यतुल्यत्वं दुःखहेतुता ।
प्राग्जन्मोपार्जितैः पुण्यैः प्राप्ते ब्राह्मणविग्रहे ॥

सन्न्यासाख्याश्रमयुते क्वचन ज्ञानसाधने ।
आत्मा काल्पनिकं वासमकरोन्नतु वास्तवम् ॥

मनुष्योऽहं कृशः कृष्णो वर्णाश्रमसमन्वितः ।
ज्ञानी कर्मी सुखी दुःखीत्येवमाद्यास्य कल्पना ॥

नित्यमेकान्तशीलानां यतीनां योगिनामपि ।
पुण्यक्षेत्रनिवासश्च ध्वन्यतेऽत्र तपस्विनाम् ॥

तत्त्वमित्थं विनिर्धार्य तत्साक्षात्कारकारिणीम् ।
अजपामन्तरुद्यन्तीं वदन्त्यक्षरमातृकाम् ॥ १ ॥

**क्षेत्रे तस्मिन् सहविहरतामिन्द्रियाणां मृगाणां**
**कृत्वा तृप्तिं विषयकबलैर्यापयित्वा दिनानि ।**
**संसाराब्धेः प्रतरणविधावाञ्जनेयं यथान्यं**
**हंसं कञ्चित् सहचर[2]मसौ मानसस्थं ददर्श ॥ २ ॥**

क्षेत्रे तस्मिन्निति । मानसस्थमिति पाठः ।
पराग्रूपेषु विषयेष्विन्द्रियाणां प्रधावताम् ।
व्यस्तेन रूपकेणात्र रूप्यते मृगरूपता ॥

---

१. 'ध' ख. पाठः.  २. 'म त संङ्गं द' क. पाठः.

प्रत्यग्रूपापरिज्ञानादिन्द्रियाणां मृगात्मता ।
दिग्वातार्कप्रचेतोश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥

सदैव सन्तं श्रोत्रादौ[1] न विजानन्ति देवताः ।
योगाभ्यासैकनिष्ठानां पुण्यक्षेत्रनिवासिनाम् ॥

पुण्या मृगाः सहचरा इत्येषोऽर्थोऽत्र सूच्यते ।
यत्र कृष्णमृगाः सन्ति तत्र धर्मान् निबोधत ॥

दर्भग्रासादिदानेन मृगादीनां दयालवः ।
कालक्षेपं प्रकुर्वन्ति समाध्यन्ते तपस्विनः ॥

हनूमान् स्वयमुत्तीर्णः (सेतु? सिन्धुं) रामं च तारयन् ।
सेतुं चकार विस्तीर्णं शैलैः कपिकुलाहृतैः ॥

हंसो[2]व्यञ्जनरूपाख्यां(?)कुण्डलिन्यां समुत्थितः ।
कुरुते तारकं सेतुं यो[3]गतत्त्वप्रकाशकम् ॥

यश्चित्तसन्ततिगतः स लयः प्रदिष्टो
यश्च प्रभञ्जननिरोधकृतो हठः सः ।
यो मन्त्रमूर्तिवशगः स तु मन्त्रयोगो
यश्चित्तवृत्तिरहितः स तु राजयोगः ॥

कश्चिल्लौकिकहंसेभ्य उत्कृष्टं मन्त्ररूपिणम् ।
अन्तः सहाभ्यां वर्णाभ्यां सञ्चरन्तं निरन्तरम् ॥
अग्नीषोमात्मकं प्राहुः शिवशक्त्यात्मकं च त(त्? म्) ।
प्राणापानात्मकं केचित् सततं प्रेर्यते यं(तौ? तः) ॥
शक्त्यहङ्कारधीनादजीवचित्तमरुद्गणैः ।
हंस इत्युच्यते सद्भिः परहंसः परः शिवः ॥

स एव प्रतिलोमेन संहारक्रमतो बुधैः ।
सोऽहमित्युपदिष्टोऽत्र स्थूलो हंसः प्रकीर्त्यते ॥
सकारं च हकारं च लोपयित्वा प्रयोजयेत् ।
सन्धिं च पूर्वरूपा(ख्यां? ख्य) ततोऽसौ प्रणवो भवेत् ॥

---

१. 'देः' ख. पाठः. २ 'प्य', ३. 'ग' क. पाठः. ४. 'णम् । अग्नी' ख. पाठः ५. 'अग्निष्टोमा', ६ 'च', ७. 'णाः' क. पाठः.

अकारं चाप्युकारं च मकारं बिन्दुनादकम् ।
पञ्च वर्णानमुष्याहुः पञ्चब्रह्मप्रकाशकान् ॥
प्रणवस्य शिखेत्युक्तः परो हंसो मनीषिभिः ।
यो वेदादौ स्वर इति श्रुतिषु प्रतिपादितः ॥
बिन्दुनादात्मकः सोऽयं दृश्यते मानसे स्थितः ।
प्रसन्ने लौकिको हंसो यथा सरसि मानसे ॥
इति प्रोक्तो मन्त्रयोगो भक्तियोगस्तु भाष्यते ॥ २ ॥

**दृष्टे तस्मिंश्चिरविरहितां प्रेयसीं रुद्रभक्तिं**
**स्मारं स्मारं सजलनयनस्तत्र तूष्णीं बभूव ।**
**उच्चैः स्थित्वा हतविधिवशात् प्राप्ततादृग्विधानां**
**मूकीभावः खलु समुचितो बान्धवानां पुरस्तात् ॥ ३ ॥**

दृष्टे तस्मिन्निति ।

भक्तस्यानन्दयोगेन स्त्रीवियुक्तस्य योगिनः[1] ।
तूष्णींभावोऽश्रुपातश्च स्यातां भावविभागतः ॥
साम्राज्ये सुचिरं स्थित्वा राजा युद्धे पराजितः ।
तूष्णीं स्याच्छत्रुतो बद्धो व्रीलितो बन्धुदर्शने ॥
भ्रष्टः कर्मवशात् स्वर्गाद् देहमाश्रित्य दुःखितः ।
मोक्षस्य ते + दृष्टेऽस्मिन् समाधौ मौनमाश्रयेत् ॥ ३ ॥

**जन्मग्रीष्मश्रममुषि मिलत्सच्चिदानन्दवर्षे**
**सोहम्भावस्फुरणसमये सम्यगासाद्यमाने ।**
**आत्मोदन्तं प्रियजनमसौ प्रापयिष्यन् प्रहृष्टः**
**क्लृप्तार्घाय प्रशमकुसुमैः स्वस्ति तस्मै जगाद ॥ ४ ॥**

जन्मग्रीष्मेति ।

प्रेयस्याः स्वां दशां वक्तुं प्रियाविरहितः पुमान् ।
दूतं सन्तोष्य गमयन्नाशास्ते मङ्गलाशिषः ॥

---

१. 'शोकतः ।' क. पाठः.

शिवोऽहमित्यनुभवं शुश्रूषूनपि बोधयन् ।
कृत्वात्ममनसः शान्तिं मङ्गलं मोक्षमादिशत् ॥ ४ ॥

**भूरिक्लेशे विषयविपिने भूयसा मुह्यमानं**
**भक्त्यावासं[2] पशुपतिपदं गन्तुमेनं ययाचे ।**
**नैवाविन्दत् तदिह वचसां चेतसामप्यभूमिं**
**युक्तायुक्तेष्वपि हि विदुषामर्थिनां नो विवेकः ॥ ५ ॥**

**भूरिक्लेश** इति ।

आर्जने रक्षणे नाशेऽप्यर्थी[3] दुःखतरा भृशम् ।
अर्थसाध्याश्च विषया इति मुग्धा न (मंस ? मन्व)ते ॥

विपिनैः सह रूप्यन्ते विषयाः क्लेशसाम्यतः ।
गन्तुं निर्विषयं स्थानं याचते विषयोद्यतम् ॥

दूतो मन्द[4]गतिः स्थानं गन्तव्यमतिदूरतः ।
असाध्यमिति कामार्त्ता[5] न विजानन्त्यपेक्षया ॥ ५ ॥

**देवेष्वेकस्त्रिषु वितनुते सात्त्विकं प्राप्य रक्षां**
**लोकस्यान्यौ जननिधने[6] राजसं तामसं च ।**
**तस्माद् यामि त्रिभुवनगुरुं दीनदीनोऽर्थिभावात्**
**कः संश्रित्य प्रभुमनुगुणं प्राप्नुयान्न स्वकामान् ॥ ६ ॥**

**देवेष्वेक** इति ।

हे मनस्त्वां समाश्रित्य गुणत्रयसमन्वितम्[7] ।
सृष्टिरक्षणसंहारान् कुर्वन्त्यजहरीश्वराः ॥

तस्माद् गुणानुसारित्वादानुकूल्याच्च सात्त्विकम् ।
त्वामाश्रयामि संततं[8] गुरुं संसारतारकम् ॥ ६ ॥

**औदासीन्यं नहि समुचितं साम्प्रतं मय्यनाथे**
**यज्जन्तूनां भवति दयितं जीवितं त्वद्विधेयम् ।**

---

१. 'शे', २. 'मि' क. पाठः. ३. 'विषयाः क्लेशभागिनः ।' ख. पाठः. ४. 'न्त्र' क. पाठः. ५. 'न्धा' ख. पाठः. ६. 'रून्' क. पाठः. ७ 'तः', ८. 'स्मरणं गु' ख. पाठः.

**भूयादण्डं भुवनमखिलं त्वां विना पाहि तन्मां**
**भक्तिं यथास्तव च सहजामाशु सन्देशतो मे ॥ ७ ॥**

**औदासीन्यमिति ।**

त्यजामि जीवितं प्रेष्ठमौदासीन्यं करोषि चेत् ।
प्रवर्तसे चेदन्यत्र न मे काश्चित् प्रवृत्तयः ॥

अयमभिप्रायः —

चित्तायत्तं धातुबद्धं शरीरं चित्ते नष्टे धातवो यान्ति नाशम् ।
तस्माच्चित्तं सर्वतो रक्षणीयं स्वस्थे चित्ते प्राप्यते वाञ्छितार्थः ॥७॥

**गन्तव्यं ते गिरिशसदनं द्वादशान्ताभिधानं**
**धन्या तस्मिन् भुवनमहिता सत्वरं मुक्तिकन्या ।**
**शान्तिश्रद्धाश्रुतिपरिवृता त्वां त्वियं चेद् वृणाति**
**प्राप्ताश्लेषः प्रियसख! तया नैव मां विस्मरे त्वम् ॥ ८ ॥**

**गन्तव्यमिति ।**

जीवन्मुक्तः प्रियतमामवाप्य रमसे यदि ।
अणिमादिष्वतिभ्रान्तो नात्मध्यानं परित्यज ॥
प्रेयसीं मम सन्देशे प्रीणयेत्यपि बुध्यते ॥ ८ ॥

**आदौ तावच्छृणु कथयतो मार्गमव्याहतं मे**
**सन्देशं ते श्रवणसुभगं सौम्य! वक्ष्यामि पश्चात् ।**
**पीत्वा पीत्वा शशिविगलितां यत्र पीयूषधारां**
**पद्मे पद्मे विहितवसतिः प्रत्यहं यास्यसि त्वम् ॥ ९ ॥**

**आदौ तावदिति ।**

मोक्षमार्गः सुषुम्णाख्या ब्रह्मनाडीति विश्रुतः ।
प्रापयेत् पिङ्गला स्वर्गं पितृलोकमिडा तथा ॥
मार्गस्याव्याहतत्वं तु मरणव्याधिहीनता ।
सन्देशो नाम दूतेन हार्यमाणार्थवाचकः ॥
परमार्थोपदेशो वा श्रवणात् पापनाशनः ।
विश्रम्याधारपद्मेषु धारणाभ्यासयोगतः ॥

---

१. 'श्रे' क. पाठः. २. 'मा', ३. 'रार्थम् ।', ४. 'णा' ख. पाठः. ५. 'य', ६. 'स', ७. 'गी' क. पाठः. ८. 'ख्यो' ख. पाठः. ९. 'ता' क. पाठः. १०. 'मा' ख. पाठः. ११. 'श्रा' क. पाठः.

स्यन्दमानां सुधां पीत्वा द्वादशान्तेन्दुमण्डलात् ।
परमानन्दसन्तुष्टः प्रत्यहं त्वं गमिष्यसि ॥ ९ ॥

**मार्गा[1] बु[2]द्धक्षपणककणादाक्षपादैः प्रयाता**
**युक्ता गन्तुं नखलु भवता कर्कशास्तर्कशैलैः ।**
**अन्यान् कांश्चिच्छिवपदचरानादसद् वच्मि साधो !**
**तेषामेकं प्रविश सहसा यत् सखे! रोचते ते ॥ १० ॥**

**मार्गा इति ।**

बौद्धाः शून्यत्वमिच्छन्ति बुद्धिं च क्षणनाशिनीम् ।
निर्विश्रमां च श्रमणाः सततोर्ध्वगतिं विदुः ॥
अन्तः प्रवि[3]ष्टं जन्तूनां सर्वात्मानं सदाशिवम् ।
कणादश्चाक्षपादश्च मन्वाते भिन्नमात्मना ॥
सुखपादप्रचाराश्च शिवलोकप्रवेशकाः ।
बहवः सन्ति मार्गाश्च सौषुम्णोऽध्वा तवोचितः ॥ १० ॥

**आदौ तत्त्वं तदनु भुवनं तत्परस्तात् पदं स्यात्**
**पश्चाद् वर्णो मनुरथ ततश्चो[4]र्ध्वमध्वा कलैव ।**
**कालक्षेपो न भवतु तवेत्यत्र संसूचितास्ते**
**ये[5]षामेषां विभवकथने कल्पकोटिश्च नालम् ॥ ११ ॥**

**आदौ तत्त्वमिति ।**

भूतानि पञ्च प्राणाश्च करणानि चतुर्दश ।
अध्वानोऽन्ये प्रसिद्धत्वात् प्रपञ्च्यन्ते न विस्तरात् ॥ ११ ॥

**सौषुम्णोऽध्वा सकलसुगमो नैव शीतो नचोष्णो**
**हिंस्रैः स्पृष्टो नहि पुनरयं मृत्युमूर्छाज्वराद्यैः ।**
**तत्त्वालम्बी भुवनमहितो योऽन्यवर्णे पदे स्वे**
**स्थित्वा नूनं मनुरपि कलासंश्रयो येन यातः ॥ १२ ॥**

**सौषुम्णोऽध्वेति ।**

सकलस्य परिज्ञानात् स हि तस्य तवोचितः ।
मार्गोऽग्नी[6]षोमयोरैक्याच्छीतोष्णादिविवर्जितः ॥

---

१. ‘ति’ क. पाठः. २ ‘बौ’, ३. ‘ह’, ४. ‘द्दा’ ख. पाठः.. ५. ‘ते’,
६. ‘ग्निष्ठोम’ क. पाठः.

मनुर्नादात्मको मन्त्रः षण्णामप्याश्रयोऽध्वनाम् ।
मूलात् परा च पश्यन्ती मध्यमा वैखरीति च ॥
परिणामभुपागम्य तं चादिस्थानघट्टनात् ।
पञ्चाशद्वर्णतां प्राप्य सर्वमन्त्रात्मतां गतः ॥
याति सौषुम्णमार्गेण त्वं च तं मार्गमाश्रय ।
नीत्यादिशास्त्रतत्त्वज्ञस्त्रिषु लोकेषु विश्रुतः ॥
साम्राज्ये स्वे पदे स्थित्वा वर्णाश्रमसमन्विते ।
चतुष्षष्टिकलायुक्तो येन लोकानपालयत् ॥
स आचारः सतां सेव्य इति श्लेषेण कीर्त्तितम् ॥ १२ ॥

**सेतुः सोऽयं भवजलनिधेर्गन्तुकामस्य पारं**
**निःश्रेणी च त्रिदशभुवनारोहणायानपाया ।**
**पक्कं लब्धुं सुचरितफलं कल्पवृक्षोऽन्तिकस्थः**
**स्थानं शम्भोस्नव जिगमिषोर्यस्तु मार्गो मयोक्तः ॥ १३ ॥**

**सेतुः सोऽयमिति ।**

तारस्य नादरूपस्य सा सुषुम्णा निवासभूः ।
सेतुरित्युच्यते सेयं संसाराम्भोधितारणात् ॥ १३ ॥

**शास्त्रं बौद्धं तुलयतितरां पञ्चभिः स्कन्धभेदै-**
**र्यत्रोत्पन्नैर्जगदिदमभिव्यज्यते मार्गभेदैः ।**
**वेदान्तं च प्रथयति पुनः सौम्य! सौषुम्णमार्ग-**
**स्तत्त्वेनान्तः किल विलसता दूषयन्नन्यभावम् ॥ १४ ॥**

**शास्त्रमिति ।**

मध्यस्थायाः सुषुम्णायाः पञ्चपर्वसमुद्भवाः ।
शाखोपशाखारूपेण वर्न्ते कोटिनाडयः ॥
सौत्रान्तिक(:) श्रावकाख्यं मन्त्रं वैभाषिकोऽब्रवीत् ।
योगाचारश्च वज्राख्यमिति यानत्रयं क्रमात् ॥
महायानं माध्यमिक(मि ? इ)ति बौद्धाश्चतुर्विधाः ।
द्वादशायतनान्याद्यः पञ्च स्कन्धाननन्तरः ॥

---

१. 'माणमु', २. 'त.', ३. 'ब्छू', ४. 'णा' क पाठः. ५. 'नौष्यः प' ख.पाठः.

अन्यस्तु क्षणिकज्ञानमभावं शून्यमन्तिमः ।
षडिन्द्रियैः षड्विषयैर्द्वादशायतनं विदुः ॥

स्कन्धास्तु रूपविज्ञानसंज्ञासंस्कारवेदनाः ।
मनुष्यादिशरीराणां परिणामविधायकाः ॥

रूप्यन्त इति रूपाणि विषयाश्चेन्द्रियाणि च ।
विषयेन्द्रिययोर्ज्ञानं विज्ञानस्कन्ध उच्यते ॥

सुखं दुःखं च मोहश्च स्कन्धः स्याद् वेदनाह्वयः ।
संज्ञागुणक्रियाजातिविशिष्टप्रत्ययात्मिका ॥

पञ्चधा कल्पना प्रोक्ता संज्ञास्कन्धस्तु सौगतैः ।
गवां गौरिति संज्ञोक्ता जातिर्गोत्वं तु गोगतम् ॥

गुणाः शुक्लादयस्तस्य गच्छन्त्या[1]द्यास्तथा क्रियाः ।
शृङ्गी चतुष्पाल्लो[2]ङ्गूली विशिष्टप्रत्ययस्त्वसौ ॥

एवं पञ्चविधा क्लृप्तिः संज्ञास्कन्ध इतीर्यते ।
रा[3]गाद्याः पुण्यपापे च संस्कारस्कन्ध उच्यते ॥

स्वतःकालदशादेशविप्रकृष्टार्थवेदिना ।
क्षणिकत्वं च शून्यत्वं दूष्यते स्थायिनात्मना ॥

प्रधानपरमाण्वाद्या विप्रकृष्टाः स्वभावतः ।
कालतो विप्रकृष्टास्तु कूर्मवामनकल्कयः ॥

देशतो विप्रकृष्टास्तु हिमवन्मेरुमन्दराः ।
जाग्रत्स्वप्नोद्भवा भावा अवस्थाविप्रकर्षिणः ॥ १४ ॥

**आपृच्छस्व प्रकृतिमनघामादरान्मातरं ते**
**यत्सम्पर्काद् गुणिषु गणनां पूरुषोऽपि प्रपेदे ।**
**संसारा[6]ख्यं घटयति च[7] या स्यन्दनं तस्य नूनं**
**दैत्येन्द्राजौ दशरथरथं केकयस्येव कन्या ॥ १५ ॥**

**आपृच्छस्वे**ति ।

---

१. 'त्या', २. 'ला' ख. पाठः. ३. 'रो' क पाठः. ४. 'नं' ख. पाठः. ५. परामा' क. पाठः. ६ 'ख्यो' ख. पाठः. ७. 'य' क. पाठः.

निर्गुणं पितरं त्वां च गुणवन्तमकल्पयत् ।
स्वैर्गुणैर्या गुणवती मातरं तां विचारय ॥

आमन्त्र्य मातापितरौ स्नेहाद् बन्धून् सखीनपि ।
अध्वानं यान्ति कर्तार इत्यर्थौ ध्वन्यतेऽमुना ॥ १५ ॥

**वायुः सेवां तव शिवपदं[1] गन्तुकामस्य कुर्यात्**
**प्राणापानप्रभृतिभिरसौ वृत्तिभिः सेव्यमानः ।**
**त्रातुं लोकानसुरसमरं धावतो वृत्रशत्रोः**
**प्रेम्णा साक्षात् परमपुरुषो यद्वदंशावतारैः ॥ १६ ॥**

**वायुः सेवामिति ।**

यत्र यत्र मनो याति वायुस्तत्रानुधावति ।
अविनाभाविनावेतौ मनःप्राणौ परस्परम् ॥ १६ ॥

**पाण्डोः पुत्रा हरिमिव सखे! पञ्च बुद्धीन्द्रियाख्याः**
**सेविष्यन्ते पथि सहचरास्त्वां प्रमोदार्घ्यदानैः ।**
**(काम)क्रोधा विषयजनितास्वादतृष्णा[2] विपक्षा**
**मोहान्धोत्थाः सपदि शतशो यैर्जिता देवतांशैः ॥ १७ ॥**

**पाण्डोरिति ।**

पाण्डवाः प्रथिताः पञ्च राजसूये महाक्रतौ ।
पूर्णपात्रप्रदानेन यथा विष्णुमवस्थिताः ॥

प्रत्यक्प्रावण्यमापन्नान्यानन्दार्घ्यप्रदानतः ।
सेवेरन्निन्द्रियाणि त्वामात्मयोनेऽन्तरात्मनः ॥

पाण्डवा यमवाय्विन्द्रनासत्याङ्गसमुद्भवाः ।
दिग्वातार्कप्रचेतोश्विदेवतानीन्द्रियाण्यपि ॥

कामादयो विपक्षाः स्युस्तथा दुर्योधनादयः ।
शब्दादयश्च राष्ट्राणि विषया इति भाषिताः ॥
अन्धत्वाच्च[3] महामोहो धृतराष्ट्रः स्वभावतः ॥ १७ ॥

---

१. 'र', २. 'ह' क. पाठः. ३. 'न्धोऽज्ञत्वान्म' ख. पाठः.

**पूर्वं सौम्यां प्रविश पदवीं यामिडामाहुरार्या-**
**स्तीर्थं यायास्तदनु यमुनाजाह्नवीसङ्गमाख्यम् ।**
**मूलस्थानं नवशशिभृतो नामतः कामरूपं**
**मुक्त्वा यस्मिन् मृदितकलुषाः कामरूपा भवन्ति ॥ १८ ॥**

**पूर्वमिति ।**

सौम्या सोमकलायुक्ता सुसञ्चारा च गच्छ(ता? ताम्) ।
प्राणायामक्रमश्चात्र गम्भीरोऽद्य निगद्यते ॥
बहिः पिङ्गलया वायुं रेचयेत् सूर्यरूपिणम् ।
तमेव पूरयेदन्तस्सोमात्मानं सुधामयम् ॥
अग्नीषोमात्मकं[2] सम्यक् कुम्भयेच्च सुषुम्नया ।
गङ्गाख्या पिङ्गला नाडी यमुनेडा प्रकीर्तिता ॥
सरस्वती सुषुम्नोक्ता मूलाधारश्च सङ्गमः ॥ १८ ॥

**दीपाकारं[3] द्युतिदलितबाह्यान्तरंध्वान्तजालं**
**मूले पुण्यं फलितमिव नस्तत्सुषुम्नाद्रुमस्य ।**
**लिङ्गं सिद्धैर्विरचितबलि द्रक्ष्यसि प्रायशोऽग्रे**
**यस्मिन् सिद्धिं समभिलषितां दृष्टमात्रे लभन्ते ॥ १९ ॥**

**दीपाकारमिति ।**

मूलाधारे कामलिङ्गं बाणलिङ्गं हृदि स्थितम् ।
स्वयम्भुलिङ्गं भ्रूमध्ये पूज्यते योगनिष्ठितैः ॥

यथाहुर्महर्षयः —

मध्यमेऽपि हृदयेऽपि ललाटे स्थाणुवज्ज्वलति लिङ्गमदृश्यम् ।
अस्ति गार्गि! परमार्थमिदं त्वं पश्य पश्य मनसा रुचिरूपम् ॥

इति ॥ १९ ॥

**आराध्येशं नियमकुसुमैर्वेदपत्रे (य? हृद)ब्जे**
**प्रादक्षिण्याद् व्रज तमभितो वन्दमानो निषण्णान् ।**
**घ्नन्तं विघ्नान् गणपमखिलोत्तारकं तारकारिं**
**क्षेत्राधीशं क्षपितदुरितं दुर्गतिघ्नीं च दुर्गाम् ॥ २० ॥**

---

१. 'म्यं', २. 'ग्निष्टोमा' ३. 'र', ४. 'रं' क. पाठः. ५. 'स्मृतिर' ख. पाठः.

आराध्येशामिति[1]। यथाहुः—

"मूले लिङ्गे च नाभौ हृदि गलकुहरे भ्रूयुगस्यान्तराले
पद्मं वेदर्तुधातुद्युमणिशशिकलाश्रोत्रसंख्यातपत्रम्।
एतस्मिन् वादिसान्तैर्बलडफकठयुक्तादिस(र्गा? र्ग)क्षहान्तै-
र्वर्णैर्विद्योतमाने वसति मुहुरसौ हंसरूपी महेशः॥"

इति॥ २०॥

प्रेक्षिष्यन्ते सुकृतसुरभिं प्रस्फुरद्धीविकासं
सिद्धास्तस्मिंश्चिरपरिचितास्त्वां वसन्तं वसन्तम्।
मन्दं मन्दं तदनु पवनैर्वीज्यमानं सगन्धैः
स्फूर्जत्कामं प्रचुरपरमानन्दनिष्यन्दपूर्णम्॥ २१॥

प्रेक्षिष्यन्त इति।

हंसो ज्ञानप्रकाशित्वात् सुरभिः पुण्यकीर्तिभिः।
अष्टैश्वर्यप्रहृष्टात्मा बन्धुभिः सेव्यतेऽनिलैः॥

वसन्तकालः सुरभिर्नाम्ना पुष्पविकासकृत्।
मकरन्दविनिष्यन्दी कामोत्साहसमर्थकः॥

पुष्पगन्धाभिवाहद्भिः (?) सेव्यते मन्दमारुतैः॥ २१॥

दिव्या शक्तिः परमपुरुषप्राप्तये श्रद्दधाना
मूले तस्मिन् निवसति चिरं सा सुषुम्नाद्रुमस्य।
शोकक्रान्ता जनकतनया प्राग् यथाशोकमूले
तस्यै हर्षं वितरतु भवान् यद्वदार्यो हनूमान्॥ २२॥

दिव्या शक्तिरिति।

द्वादशान्तशिवप्राप्त्या मूलशक्तिं प्रहर्षय।
रामाङ्गुलीयदानेन हनूमानिव जानकीम्॥ २२॥

सैषा गौरी सरसबिसिनीकाण्डतन्तूपमाङ्गी
भूतेशेन प्रथितमहसा सङ्गतं प्रार्थयन्ती।

---

१. 'ति। मू', २. 'ञ्च' क. पाठः. ३. 'ख' ख. पाठः. ४. 'ठादियु', क. पाठः. ५. 'सः', ६. 'न्त', ७. 'सु', ८. 'रं', ९. 'च्या' ख. पाठः.

मूले तस्मिञ् ज्वलितमनलं त्रिः परिक्रम्य सम्यक्
प्रायस्तन्वी चरति सुचिरं तापहन्त्री तपांसि ॥ २३ ॥

सैषेति ।

समाध्यन्ते तिरोभूते कामारौ पाण्डुरा कृशा ।
विरहेणापि तपसा तन्वी गौरी तपस्यति ॥ २३ ॥

अन्यत् कार्यं प्रिय इति वदाम्यादराच्छ्रेयसे ते
कामो भूत्वा कमपि कलयंस्त्वं सुषुम्नेक्षुचापम् ।
स्मेरैः सद्यः पवनविशिखैः सौम्य! निस्तारकः सन्
कुर्याः शक्त्या परशिवतनावैक्यमायुः प्रमत्तः ॥ २४ ॥

अन्यत् कार्यमिति ।

तारकासुरसंहारमूलहेतुर्दिवौकसाम् ।
विवाहान्ते पुनर्भूत्वा शिवावघटयत् स्मरः ॥
सुषुम्नामवलम्ब्य त्वं संसारोत्तारकारकम् ।
प्राणादिभिः समुत्थाप्य मूलशक्तिं शिवं नय ॥ २४ ॥

उद्दीप्याग्निं सपदि पवनैर्मूलकुण्डे ज्वलन्तं
वेणोः पर्वस्विव समभवद् यः[1] सुषुम्नाधमन्याम्[2] ।
वक्रं पूर्वं[3] विहितसरणिं निर्दहन् षड्गुणं तं
सिञ्चेः पश्चाच्छिरसि[4] परमव्योमपीयूषवर्षैः ॥ २५ ॥

उद्दीप्याग्निमिति ।

राजमार्गं वितन्वन्तो दग्ध्वा कान्तारमग्निना ।
सिञ्चन्ति सलिलैर्भृत्याः स्वामिनः समरोद्यमे ॥ २५ ॥

सौषुम्नस्य प्रकृतिगहनं कीचकस्याशु चक्रं
(भी ? भि)त्त्वा पूर्वं भजतु स भवान् भीमसेनेन [साम्यम् ।
ज्ञानेष्वासं तदनु कलयन्नुत्तराशानुगामी
प्रत्याहर्तुं रिपुविषयतो गोकुलान्यर्जुनः स्यात् ॥ २६ ॥

---

१. 'यत्' क पाठः. २. 'तत्', ३. 'श्वेत्', ४. 'शिरप' ख. पाठः.

**सौषुम्नस्येति ।**

सुषुम्ना वेणुतुल्यत्वान्नाम्ना[1] रक्षश्च कीचकः ।
मोक्षमार्गो विराटस्य पुत्रश्चोत्तर उच्यते ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥

गोकुलानीति कथ्यन्ते पशवश्चेन्द्रियाणि च ।
शब्दादयोऽपि विषया राष्ट्रं दुर्योधनस्य च ॥ २६ ॥

**बद्ध्वा मूलं दृढमतितरामप्रवेशाय मृत्यो-**
**रोड्याणाख्यामथच महतीमर्गलां सन्नियम्य ।**
**ऋज्वाकारां तदनु च महामुद्रया शक्तिमेनां**
**स्वर्गद्वारं गमय सहसा सौम्य! सौषुम्नरन्ध्रम् ॥ २७ ॥**

**बद्ध्वा मूलमिति ।**

महामुद्रां नभोमुद्रामोड्याणं च जलन्धरम् ।
मूलबन्धं च यो वेत्ति स योगी सिद्धिभाजनम् ॥

लिङ्गनाभ्योरन्तरालं बन्धयेदनिशं धिया ।
उड्डीय याति तेनैव शक्तिरोड्याणपीठकम् ॥

गौर्गोमयविसर्गान्ते गुदमाकुञ्चयेद् यथा ।
तथैवाकुञ्चयेद् वायुं मूलबन्धोऽयमुच्यते ॥

तिष्ठेत् पद्मासने[2] नित्यमृजुकायशिरोधरः ।
प्रसुप्तसर्पवच्छक्ति( वे ? वें)ष्टिताङ्गी भवेदृजुः ॥

द्वारं[3] स्वर्गस्य सौषुम्नं[4] मूलेऽर्धच्छिन्नवंशवत् ।
ब्रह्मरन्ध्रं[5] तु मोक्षस्य द्वारमाहुः शिरोगतम् ॥ २७ ॥

**सम्पूर्णेन्दुद्युतिसहचरीं हंसरूपां सखे! त्वं**
**वाचां[6] देवीं पथि वहसि चेद् वाञ्छितार्थोपलब्ध्यै[7] ।**

---

१. 'ङी', २. 'र्के', ३. 'रः', ४. 'न्नमूलोर्ध्वच्छिन्नपाश', ५. 'न्ध्रस्तुमो', ६. 'चं', ७. 'ब्धिः' ख. पाठः.

**उत्पश्यामि स्फुटदशमुखप्राणयुक्तं भवन्तं**
**रक्षोनाथं निजकर[1]समुत्क्षिप्तकैलासमूर्तिम् ॥ २८ ॥**

**सम्पूर्णेति ।**

प्राणादयो वायवश्च बलं च प्राण उच्यते ।
रक्षोनाथसमप्राणं त्वामुत्पश्यामि रावणम् ॥ २८ ॥

**मार्गं सम्यक् प्रवित[2]तमृजुं मध्यमं संश्रयेथा**
**मुञ्चन्नन्यावधिककुटिलौ दक्षिणं चोत्तरं च ।**
**याभ्यां गत्वा दिवि च नरके प्राणिवर्गः प्रकामं**
**यातायातैर्जननमरणैः खेदयत्यात्मरूपम् ॥ २९ ॥**

**मार्गमिति ।**

इडानाड्युत्तरे पार्श्वे पिङ्गला दक्षिणे स्थिता ।
ताभ्यां गता न जानन्ति मोक्षं विषयमोहिताः ॥ २९ ॥

**यद्येकं वा प्रविशसि तयोर्मार्गयोस्त्वं प्रमादाद्**
**वैरी मोहो विषयकलुषस्त्वां जयेदक्षकेल्या ।**
**धर्मात्मानं स इव शकुनिः पाण्डुपुत्रं सभायां**
**पुण्यश्लोकं नलमपि यथा पुष्करो ज्ञातिभावात् ॥ ३० ॥**

**यद्येकमिति ।**

अक्षकेलिरिति प्रोक्ता द्यूतक्रीडा छलोत्तरा ।
इन्द्रियाणां प्रवृ[3]त्तिश्च विषयेषु प्रधावताम् ॥ ३० ॥

**मोहे लाक्षागृह इव तदा दह्यमाने समन्तात्**
**सौषुम्नं तत् प्रविश सुषिरं वृत्तिभेदैश्च शक्त्या ।**
**मात्रा सुतैः सह च सहजैर्भीमसेनः सुरुङ्गां**
**यद्वत् प्राप्तो विदुरगुरुणा पूर्वमेवोपदिष्टाम् ॥ ३१ ॥**

**मोह इति ।**

दह्यमाने महामोहे निर्विकल्पसमाधिना ।
सुतैः सङ्कल्पमुख्यैश्च मात्रा शक्त्या च संयुतः ॥

---

१. 'भुजस', २. 'श' ख. पाठः. ३. 'त्तिं च वि' क., 'त्तिश्च मात्रा' ख. पाठः.

विदुषा गुरुणादिष्टः सुषुम्नागह्वरं विशेत् ।
लाक्षागृहे दह्यमाने शठैर्दुर्योधनादिभिः ॥
प्रसुप्तां मातरं भ्रातॄन् बिभ्रद् भीमः पुरा यथा ।
सुरुङ्गां विदुरेणादावुपदिष्टां प्रविष्टवान् ॥ ३१ ॥

**सिद्धिप्राप्त्यै बिलमिव हठात् साधका बद्धधैर्या**
**हंसाः शक्त्या विदलितमिव क्रौञ्चरन्ध्रं गुहस्य ।**
**आधारोद्यज्जरठ[1]भुजगीवासवल्मीकरन्ध्रं**
**प्राप्तो भूया[2]स्तदनु तपसा त्वं च वाल्मीकितुल्यः ॥ ३२ ॥**

**सिद्धीति ।**

वल्मीकावृतसर्वाङ्गो वाल्मीकिर्निश्चलो यथा ।
चिरकालं समाधिस्थस्तथा त्वं निश्चलो भव ॥ ३२ ॥

**मेरुं पश्चात् प्रविश सकलज्योतिषामेकवासं**
**यं सर्वात्मा धनुरिव द[3]धद् ध्यानयानाधिरूढः ।**
**सत्त्वं नाम्ना रज इति तमश्चेति तिस्रः पुरीस्ताः**
**सन्धाय त्वां शरमिव मनः सत्वरं निर्ददाह ॥ ३३ ॥**

**मेरुमिति ।**

इषुकारो यथा सम्यगिष्वासक्तमनस्तया ।
समीपेनापि गच्छन्तं राजानं नाव[4]बुद्धवान् ॥
वीणादण्डं महामेरुमवष्टभ्येषुसाधनम् ।
हे मनस्त्वां समाधाय सर्वात्मा निर्गुणोऽभव[5]त् ॥ ३३ ॥

**मेरोरस्य त्वयि सति गते सिंहबुद्ध्या गुहां ताँ**
**भीतिर्भूयाद् विषयविपिने नूनमाशागजानाम् ।**
**हंसीवासौ सुकृतसलिलं मानसं त्वामवाप्ता**
**स्वाधिष्ठानं सरसिजमथो संश्रयेद् दैवयोगात् ॥ ३४ ॥**

---

१. 'ठरभु' क. पाठः. २. 'याः प्रबलत', ३. 'म' ख. पाठः. ४. 'पि' क. पाठः. ५. 'छ' ख. पाठ; ६. 'ब।' क पाठः. ७. 'ताद् भू' ख पाठः.

**मैरोरिति ।**

त्वयि प्रत्यङ्मुखीभूते विषयारण्यगोचरात् ।
भोगापेक्षा मदोद्रिक्ता निवर्तन्ते स्वभावतः ॥
इयं च हंसी शक्तिस्त्वां पूर्णपुण्याम्बुमाश्रिता ।
क्रमेण धारणायोगाद् द्वितीयाधारमाश्रयेत् ॥
वर्षासु लौकिकी हंसी प्रसन्नसलिलं यथा ।
सरो मानसमासाद्य स्वावासं पद्ममाश्रयेत् ॥ ३४ ॥

**सन्ध्यामेघप्रतिभटरुचौ स्वालयाम्भोजमध्ये**
**विद्युल्लेखां तदनु च चिरस्थायिनीं वन्दमानः ।**
**साक्षाल्लक्ष्मीमिव हृदि हरेः कौस्तुभाभापिशङ्गे**
**सम्यग् यायाः सुरभिकुसुमस्वर्द्रुमैः सौम्य! सौम्यम् ॥**

**सन्ध्येति ।**

नीलाम्भोदावलीवेल्लद्विद्युद्वल्लीनिभप्रभाम् ।
नीवारशूकवत् सूक्ष्मां दीपज्वालामिव स्मरन् ॥
प्राप्याणिमाद्यमैश्वर्यं त्यागभोगक्षमो भवेत् ।
ब्रह्माद्याः शिवपर्यन्ताः षडाधाराधिदेवताः ॥
लक्ष्म्यात्मिकेयं शक्तिश्चेत्युपमानेन सूच्यते ॥ ३५ ॥

**तस्माद् गच्छेर्मणिमयमथो मण्डपं सिद्धवन्द्यं**
**यस्मिन् नत्वा मरतकमणिश्यामवर्णामपर्णाम् ।**
**स्रष्टुं पातुं भुवनमखिलं हन्तुमीशिष्यसे त्वं**
**किं किं यायान्नखलु सुकृती लक्षितस्तत्कटाक्षैः ॥ ३६ ॥**

**तस्मादिति ।**

मणिपूरकमध्यस्थां रुद्रशक्तिमिमां स्मरन् ।
शिवसारूप्यमासाद्य भवान् सृष्ट्यादिकृद् भवेत् ॥ ३६ ॥

**क्षिप्त्वा सद्यः कलुषमहिषं क्षान्तसर्वापराधा**
**देवी दुर्गा भवदभिमतं प्रापयेत् तत्र सम्यक् ।**
**कामाल्लेभे युधि करुणया नूनमस्याः किरात्याः**
**कामारातौ भृशमनुचितान्याचरन्नर्जुनोऽपि ॥ ३७ ॥**

---

१. 'मा', २ 'सेव्यं य' ख. पाठः.

